वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महा-
न्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ।
इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रका-
शिकायामष्टमोऽनुवाकः ॥ ८ ॥

---

अन्नं बहु कुर्वीत ।

अतिथ्यभ्यागतस्वजनपर्याप्तं कुर्यात् । यद्वा । बहु कुर्वीत बहु मन्वीतेत्यर्थः । अन्ने बहुमतिं कुर्यादित्यर्थः ।

तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽ-
न्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे
पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् ।
स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतिष्ठितं वेद
प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भ-
वति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ।
इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये
नवमोऽनुवाकः ॥ ९ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रका-
शिकायां नवमोऽनुवाकः ॥ ९ ॥

---

न कंचन वसतौ प्रत्याचक्षीत । तद्व्रतम् ।

स्वगृहे रात्र्यादौ[१] [ वसत्यर्थं ]भोजनार्थमागतं कमपि नरं न निराकुर्यादित्यर्थः ।

---

१ आनन्दाश्रमस्थमुद्रितपुस्तके द्विरङ्कितं दृश्यते ।

तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्।

भोजनार्थमागतानां पुरुषाणा[म]प्रत्याख्यानस्याऽऽवश्यकत्वान्निषिद्धेनापि येन केन मार्गेण बह्वन्नं संपादयेदित्यर्थः।

अराध्यस्मा अन्नमित्याचक्षते।

अस्मा उपासकायान्नमराधि सिद्धम्। उपासकार्थमेव ह्यन्नस्य निष्पत्तिः। अतस्तदर्थमेव निष्पन्नत्वादन्नानां तेषां येन केनाप्युपायेनार्जने न दोष इति भावः।

एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नꣳ राध्यते। एतद्वै मध्यतोऽन्नꣳ राद्धम्। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते।

एतद्वै मध्यतो राद्धं सर्वावयवयुक्तमप्यन्नमस्मा उपासकाय सिद्धम्। तदर्थमेवोत्पन्नमिति हि सन्त आचक्षत इत्यर्थः।

य एवं वेद।

स यया कया च विधया बह्वन्नं प्राप्नुयादिति पूर्वेण संबन्धः।

क्षेम इति वाचि।

क्षेमसाधनत्वाद्वाचः क्षेमत्वबुद्धिस्तत्र कार्येत्यर्थः। एवमुत्तरत्रापि।

योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः। विमुक्तिरिति पायौ।

विमुक्तिर्विसर्ग इत्यर्थः।

इति मानुषीः समाज्ञाः।

अध्यात्ममेता उपासना उक्ता इत्यर्थः।

अथ दैवीः।

उपासना आचक्षत इत्यर्थः।

तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु ।
ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे ।

एतच्च आध्यात्मिकोपासने संगतम् । पाठक्रमादर्थक्रमस्य बलवत्त्वा-दिति द्रष्टव्यम् ।

सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भ-वति । तन्मह इत्युपासीत । महान्भवति । तन्मन इत्यु-पासीत । मानवान्भवति । तन्नम इत्युपासीत । नम्य-न्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति ।

आकाशस्य प्रतिष्ठितत्वादिगुणयुक्ततयोपासने तत्क्रतुन्यायेन प्रति-ष्ठादिकं भवतीत्यर्थः । ब्रह्मवान्ब्रह्मत्ववानित्यर्थः । नम्यन्ते प्राप्यन्त इत्यर्थः ।

तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं
म्रियन्ते द्विषन्तः सपत्नाः ।

परितो म्रियन्तेऽस्मिन्निति परिमरः । सार्वत्रिकमरणस्याप्यवकाशत-याऽऽश्रय इत्यर्थः । एवमाकाशस्य ब्रह्मशेषत्वेन परिमरत्वेनोपासन एन-मुपासकं परितो द्विषन्तो म्रियन्त इत्यर्थः । पर्येणमिति णत्वं छान्दसम् ।

तदेतद्व्याचष्टे—

परि येऽप्रिया भ्रातृव्याः ।

अप्रिया भ्रातृव्याः शत्रवः परितो वर्तमाना म्रियन्त इत्यर्थः ।

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मा-नमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमा-त्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य ।

पूर्ववदर्थः ।

इमाँल्लोकान्कामान्नी कामरूप्यनु-
संचरन् । एतत्साम गायन्नास्ते ।

एतद्वक्ष्यमाणमित्यर्थः ।

हा ३वुहा ३वुहा ३वु ।

स्तोभाक्षराण्येतानि ।

अहमन्नमहमन्नमहमन्नम् । अहम-
न्नादो ऽ३हमन्नादो ऽ३हमन्नाद ।

अत्राहंशब्दः परमात्मपर्यन्तः । भोक्तृभोग्यवाच्यन्नान्नादशब्दावपि तत्पर्यन्तौ ।

अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् ।

श्लोक्यत इति श्लोकः श्लाघनीयजगद्रक्षणादिकृदित्यर्थः ।

अहमस्मि प्रथमजा ऋता ३ स्य ।

ऋतस्य कर्मणः प्रथमजाः सर्गाद्यसमये तत्परिपाककृदित्यर्थः ।

पूर्वं देवेभ्यो अमृतस्य ना ३ भायि ।

देवेभ्यः पूर्वं वर्तमानोऽमृतस्य मोक्षस्य नाभी रथचक्रस्य नाभिरिवाऽऽश्रयभूतः । नाभा इति गानकृतो विकारः ।

यो मा ददाति स इदेव मा ३ऽवाः ॥ ५ ॥

यो मां योग्याय शिष्याय ददात्युपदिशति स इदेव माऽवा अवाः प्राप्तो भवति । वा गतिगन्धनयोरिति धातुः, इच्छब्दोऽनर्थकः ।

अहमन्नमन्नमदन्तमा ३द्मि ।

अन्नशब्दितमचेतनं तद्भोक्तारं चेतनं चाद्मि व्याप्नोमि ।

अहं विश्वं भुवनमभ्यभवा ३म् ।

प्रलयकाले विश्वमभिभूतवानस्मीत्यर्थः ।

सुवर्न ज्योतीः ।

कमनीयदेदीप्यमानशरीरो भवति ।

इमाँल्लोकान्कामान्नी कामरूप्यनु-
संचरन् । एतत्साम गायन्नास्ते ।

एतद्वक्ष्यमाणमित्यर्थः ।

हा३वुहा३वुहा३वु ।

स्तोभाक्षराण्येतानि ।

अहमन्नमहमन्नमहमन्नम् । अहम-
न्नादो३ऽहमन्नादो३ऽहमन्नाद ।

अत्राहंशब्दः परमात्मपर्यन्तः । भोक्तृभोग्यवाच्यन्नान्नादशब्दावपि तत्पर्यन्तौ ।

अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् ।

श्लोक्यत इति श्लोकः श्लाघनीयजगद्रक्षणादिकृदित्यर्थः ।

अहमस्मि प्रथमजा ऋता ३ स्य ।

ऋतस्य कर्मणः प्रथमजाः सर्गाद्यसमये तत्परिपाककृदित्यर्थः ।

पूर्वं देवेभ्यो अमृतस्य ना ३ भायि ।

देवेभ्यः पूर्वं वर्तमानोऽमृतस्य मोक्षस्य नाभी रथचक्रस्य नाभिरिवाऽऽश्रयभूतः । नाभा इति गानकृतो विकारः ।

यो मा ददाति स इदेव मा ३ऽवाः ॥ ५ ॥

यो मां योग्याय शिष्याय ददात्युपदिशति स इदेव माऽवा अवाः प्राप्तो भवति । वा गतिगन्धनयोरिति धातुः, इच्छब्दोऽनर्थकः ।

अहमन्नमन्नमदन्तमा३द्मि ।

अन्नशब्दितमचेतनं तद्भोक्तारं चेतनं चाद्मि व्याप्नोमि ।

अहं विश्वं भुवनमभ्यभवा३म् ।

प्रलयकाले विश्वमभिभूतवानस्मीत्यर्थः ।

सुवर्न ज्योतीः ।

कमनीयदेदीप्यमानशरीरो भवति ।

## विषयानुसारेण ग्रन्थानां सूचीपत्रम्।